सञ्ज्ञेष्टकाः पूर्व्ववत् तदनन्तरभाविभिर्मन्त्रैः हृदययजुःपत्नी-
हृष्टकाश्च प्रागपवर्गमुपदध्यात्। एतदेव विवक्षित्वा दक्षिणादि-
चतुर्दिक्षु तेन हृदयं यजूंषि पत्नञ्चेत्याम्नातं। सर्व्वेष्वेतेषु
होतृमन्त्रानुवाकेषु अन्तिमभागाः याजमाने विधेनामन्त्रित्या-
दयोग्रहमन्त्रास्तैरुपधेयाः, इष्टकाविशेषा अपि ग्रहसञ्ज्ञकाः।
तान् सर्व्वान् यथावकाशमुपदध्यात्। देवस्य त्वा सवितुः
प्रसवेऽश्विनोर्बाहुभ्यां पूष्णोहस्ताभ्यामित्यनुवाकोक्ताः प्रतिग्रह-
मन्त्राः तैरुपधेया, इष्टकाविशेषा अपि प्रतिग्रहाः। लोकं
पृणेति मन्त्रोपधेया इष्टका अपि लोकं 'पृणाः', प्रतिग्रहाँल्लोकं
पृणाश्च यथावकाशमुपदध्यात्। एवमुपधाने सत्यस्य यजमानस्य
सर्व्वा अपि तत्तन्मन्त्रोक्ता देवतास्तुष्टा अभीष्टफलप्रदाश्च
भवन्ति। ततोऽयं देवैस्र सहितमग्निं चितवान् भवति॥

(८) अस्य चयनदेशस्येयत्तां विधत्ते। "रथसम्मितश्चेतव्यः।
वज्रो वै रथः। वज्रेणैव पाप्मानं भ्रातृव्यꣳ स्तृणुते। पदः
सम्मितश्चेतव्यः। एतावान्वै रथः। यावत्पदः। रथसम्मितमेव
चिनुते" इति। रथस्य यावद्देशोपेक्षितः, तावति देशे चय-
ने सति 'रथसम्मितो' रथतुल्यः, अग्निर्भवति, रथो हि वज्रस्य तृ-
तीयांशत्वात्। वज्ररूपरथः हतोयमिति श्रुतेः। अतः पापरूपं
शत्रुं 'वज्रेणैव' हिनस्ति। 'पदः' शब्देन रथैकभागवर्त्ति चक्रमु-
च्यते। चक्रपरिमिते देशे 'चेतव्यः'। न चैवं सति रथसम्मितत्वं वि-
हन्यते। चक्रं यावदस्ति तावानेव रथस्य मुख्योऽंशः। अतश्चक्र-
सम्मितत्वेन रथसम्मित एव भवति॥

(९) एतस्य चयनस्य कर्मविशेषयोगेन फलविशेषं दर्शयति। "इममेव लोकं पशुबन्धेनाभिजयति। अथो अग्निष्टोमेन ॥ ६ ॥ अन्तरिक्षमुक्थ्येन। स्वरतिरात्रेण। सर्व्वान् लोकानहीनेन। अथो सत्रेण" इति। एतच्चयनयुक्तेन पशुबन्धाग्निष्टोमयोरन्यतरेण भूलोकजयः। भूमौ विद्यमाना भोगाः प्राप्यन्ते। चयनयुक्तेनोक्थ्येनान्तरिक्षलोकभोगप्राप्तिः। चयनयुक्तेनातिरात्रेण स्वर्गभोगप्राप्तिः। अहीनसत्रयोरन्यतरेण चयनयुक्तेन सर्व्वकामप्राप्तिः ॥

(१०) चयनस्य दक्षिणां विधत्ते। "वरो दक्षिणा। वरेणैव वरꣳ स्पृणोति। आत्मा हि वर" इति। 'वरः'शब्देन गौरभिधीयते। गौर्वै वर इत्यापस्तम्बेनाभिधानात्। सा हि वर इति श्रुतेश्च। एवं सति श्रेष्ठेनैव दक्षिणाद्रव्येण श्रेष्ठं प्रीणयति। श्रेष्ठ 'आत्मा', सर्वस्य भोग्यस्य तच्छेषत्वात्। ततः स्वात्मानमेव प्रीणयतीत्युक्तं भवति ॥

(११) पक्षान्तरमाह। "एकविꣳशतिर्दक्षिणा ददाति। एकविꣳशो वा इतः स्वर्गो लोकः। प्र स्वर्गं लोकमाप्नोति ॥ ७ ॥ असावादित्य एकविꣳशः। अमुमेवादित्यमाप्नोति" इति ॥ भूलोकमारभ्य सत्यलोकान्ताः सप्तलोकाः। ते प्रत्येकमुत्तमाधममध्यमभोगेन त्रिविधः। तथा सति सत्यलोके योऽयमुत्तमभोगयुक्तश्चरमः स्वर्गः। सोऽयमधमभूलोकमपेक्ष्यैकविंशतिसङ्ख्यापूरको भवति। अतः सङ्ख्यासाम्यात् प्रकृष्टं स्वर्गमाप्नोति। द्वादशमासाः पञ्चर्तवस्त्रय इमे लोकाः असावा-

दित्य एकविंश इति श्रुतेः। आदित्यस्यैकविंशत्वात् सङ्ख्यासाम्येन तं प्राप्नोति ॥

(१२) पक्षान्तरं विधत्ते। "शतं ददाति। शतायुः पुरुषः शतेन्द्रियः। आयुष्येवेन्द्रिये प्रतितिष्ठति" इति। यथा गवामेकविंशत्या स्वर्गादित्यप्राप्तिः। तथा गवां शतेनायुरिन्द्रिययोः प्रतिष्ठितत्वं भवति ॥

(१३) पक्षान्तरं विधत्ते। "सहस्रं ददाति। सहस्रसम्मितः स्वर्गो लोकः। स्वर्गस्य लोकस्याभिजित्यै" इति। स्वर्गभोग्यद्रव्याणां बहुमूल्यत्वात् 'स्वर्गस्य' सहस्रसम्मितत्वं। अतः सहस्रदानेन स्वर्गाभिजयः। त एते पक्षाः शक्त्यनुसारेण विकल्पिताः ॥

(१४) एवं पक्षान्तरं विधत्ते। "अग्निष्टकं दक्षिणा ददाति। सर्वाणि वयाꣳसि ॥ ८ ॥ सर्वस्याप्त्यै। सर्वस्यावरुध्यै" इति। एकैकामिष्टकामग्निरित्यर्थे 'अग्निष्टकं' इति शब्दः, प्रतीष्टकमेकैका गौर्देया। तासु गोषु 'सर्वाणि वयाꣳसि' सम्पादनीयानि। वयोविशेषाश्चापस्तम्बेन दर्शिताः। एकहायनप्रभृत्या पञ्चहायनेभ्यो वयाꣳसीति। तच्च सर्वभोगप्राप्त्यै तदङ्गीकाराय च भवति ॥

(१५) इष्टका सङ्ख्यया सङ्ख्येयानां गवामलाभे पक्षान्तरद्वयं विधत्ते। "यदि न विन्देत। मन्थानेतावतो दद्यादोदनान्वा। अश्नुते तं कामम्। यस्मै कामायाग्निश्चीयते" इति। यदि दरिद्रो गास्तावतीर्न लभेत। तदा यावत्य इष्टकाः 'एताव-

तः' 'मन्थान्' 'ओदनान्वा' 'दद्यात्'। क्षीरादौ द्रवद्रव्ये सक्तुपिष्टमिश्रेण निष्पन्नो 'मन्थः' एतद्दानेनापेक्षितं 'कामं' प्राप्नोति ॥

(१६) वैकल्पिकीं दक्षिणां विधाय नियतां विधत्ते। "पष्ठौहीमन्तर्वतीं दद्यात्। सा हि सर्वाणि वयाꣳसि। सर्वस्याप्त्यै। सर्वस्यावरुद्ध्यै" ॥ ८ ॥ इति। 'तु'शब्दो विकल्पनिवृत्त्यर्थः। चतुर्वर्षा गौः 'पष्ठौही', सा च 'अन्तर्वती' गर्भिणी। तस्यां दत्तायां 'सर्वाणि वयाꣳसि' दत्तानि भवन्ति। एकशाव-नादीनां तत्र सम्भवात्। तत्र सर्वस्य भोगस्य प्राप्त्यै स्वीकाराय च भवति ॥

(१७) द्रव्यान्तरं विधत्ते। "हिरण्यं ददाति। हिरण्यज्योतिरेव सुवर्गं लोकमेति" इति। हिरण्यसदृशं ज्योतिर्यस्यासौ 'हिरण्यज्योतिः'। तादृशो भूत्वा 'सुवर्गं' प्राप्नोति ॥

(१८) द्रव्यान्तरं विधत्ते। "वासो ददाति। तेनायुः प्रतिरते" इति। वाससो दीर्घत्वादायुर्वृद्धिहेतुत्वं, चतुष्कं बोधायनेन वेदिं विविमीते वेदिं तृतीये यजेतेति विज्ञायते। तत्र सौमिकं मानमेतावदेव नानासौमिकात् प्रक्रमात् तृतीयांशः स प्रक्रमः स्यात्तेन वेदिं विविमीत इति ॥

(१९) तदेतद्विधत्ते। "वेदिं तृतीये यजेत। त्रिषत्याहि देवाः। स सत्यमग्निश्चिनुते" इति। सौमिकवेद्यास्तृतीयांशे चयनं कृत्वा तत्र 'यजेत', अंशत्रये त्रिसङ्ख्या विद्यते। तथा च सङ्ख्या सत्यमेतदिति देवा विश्वसन्ति। अत एव तत्र यथा-

जायते । त्रिराव । त्रिपत्याहि देवाः इति । त्रिक्रेयति । त्रिपत्यहि देवा इति । तस्मात् तृतीयभागेन सत्या सहितोऽग्निस्थितो भवति । अग्नौ न किञ्चिदप्यनृतं वैकल्पं भवतीत्यर्थः । पूर्व्वमेनमेव लोकं पशुबन्धेनेत्यादिना पशुबन्धाग्निष्टोमादावेतद्वचनमभ्युपगतं, तत्र पशुबन्धपत्त एव वेदितृतीयत्वविधानं व्यवस्थापयन्ति । तदेतत्पशुबन्धे ब्राह्मणं ब्रूयात् । नेतरेषु यज्ञेष्विति । 'तदेतत्' ब्राह्मणं वेदित्रितीयत्वविधिवाक्यं पशुबन्धादितरेष्वग्निष्टोमादिषु न ब्रूयात् ॥

(१०) यज्ञसभायामागतेभ्यो विद्वद्भ्यो दक्षिणां विधत्ते । "यो ह वै चतुर्होतृननुसवनं तर्पयितव्यान् वेद ॥ १० ॥ तृप्यति प्रजया पशुभिः । उपैनꣳ सोमपीथो नमति । एते वै चतुर्होतारोऽनुसवनं तर्पयितव्याः । ये ब्राह्मणा बहुविदः । तेभ्यो यद्दक्षिणा न नयेत् । दुरिष्टꣳ स्यात् । अग्निमस्य वृञ्जीरन् । तेभ्यो यथाश्रद्धं दद्यात् । स्विष्टमेवैतत् क्रियते । नास्याग्निं वृञ्जते" ॥ ११ ॥ इति । चतुर्होतृमन्त्राणामभिमानिनो देवाः प्रातःसवनादिषु प्रतिसवनं तृप्तिं प्रापणीया इति 'यो वेद' । स 'प्रजया पशुभिः' च तृप्यति सोमपानफलमपि 'एनं' 'उपनमति' । के चतुर्होतृदेवा इति तदुच्यते । सभायामुपविष्टा, 'बहुविदः' वेदशास्त्राभिज्ञाः, 'ब्राह्मणाः' एव ते चतुर्होतृदेवाः । 'तेभ्यो' दक्षिणाया अदाने अनुष्ठितं पशुबन्धाग्निष्टोमादिकर्म 'दुरिष्टं स्यात्' ।

'अस्य' यजमानस्य, एतं चितमग्निमपि ते विनाशयेयुः। तस्मात् स्वकीयश्रद्धानुसारेण दक्षिणायां दत्तायां दोषद्वये न भवतः॥

(२१) इष्टकानामुपादानद्रव्यं विधत्ते। "हिरण्येष्टको भवति। यावदुत्तममङ्गुलिकाण्डं यज्ञपुरुषा सम्मितम्। तेजो हिरण्यम्" इति। हिरण्येन निर्मिता इष्टका यस्याग्नेः सोयं 'हिरण्येष्टकः'। त्रिष्वङ्गुलिपर्वसूत्तममग्रमङ्गुलिपर्वं यावद्भवति तावदिष्टकायाः परिमाणं। तच्च यज्ञपुरुषस्य पर्वणा सदृशं भवति। 'हिरण्यं' च तेजोरूपत्वात् प्रशस्तं॥

(२२) तस्य हिरण्यस्यालाभे घृतेनाक्ताः शर्करा विधत्ते। "यदि हिरण्यं न विन्देत्। शर्करा अक्ता उपदध्यात्। तेजो घृतम्। स तेजसमेवाग्निं चिनुते" इति। घृतस्य तेजोरूपत्वात् तेनाक्तानां शर्कराणामुपधाने चितोऽग्निः स 'तेजो' भवति॥

(२३) अथ विकल्पितं चयनाङ्गं विधत्ते। "अग्निं चित्वा सौत्रामण्या यजेत मैत्रावरुण्या वा। वीर्येण वा एष व्यृध्यते। योऽग्निं चिनुते॥ यावदेव वीर्यम्। तदस्मिन् दधाति" इति। सौत्रामणीसंहितायां स्वादीं त्वेत्यनुवाकेन ब्राह्मणे निरूढस्य सुषुवाणस्य यत्रिषु यूपेष्वित्यनुवाकाभ्यां च विहिता। सेयमत्र चयनादूर्ध्वमङ्गत्वेनानुष्ठेया यद्वा मैत्रावरुणा मिथा तदङ्गत्वेनानुष्ठेया तदनुष्ठानेन यद्वीर्यं चयनेन विनष्टं तत् पुनः सम्पादितं भवति॥

सञ्ज्ञाता देवमायया। सर्व्वास्ताः” इति। ‘पांसवः’ परमाणवः। ते च मनुष्यादिभिः सङ्ख्यातुमशक्यत्वात् ‘देवमायया’ परमेश्वरमायया दुर्घटकारिण्या, ‘सञ्ज्ञाता’ यावन्तो भवन्ति, ताः सर्व्वा इत्यादि पूर्व्ववत् ॥

(४) अथ चतुर्थमाह। “यावन्त ऊषाः पशूनाम्। पृथिव्यां पुष्टिर्हिताः। सर्व्वास्ताः” इति। ‘पशूनां’ गवादीनां पुष्टिकारित्वेन पुष्टिरूपाः। ‘पृथिव्यां हिताः’ अवस्थिताः। ‘ऊषाः’ क्षारमृद्विशेषा, ‘यावन्तः’ सन्ति ताः सर्व्वा इत्यादि ॥

(५) अथ पञ्चममाह। “यावतीः सिकताः सर्व्वाः। अ-प्स्वन्तश्च या श्रिताः। सर्व्वास्ताः” इति। जलमध्ये भूम्यां वा अवस्थिताः ‘सिकताः’ ॥

(६) अथ षष्ठमाह। “यावतीः शर्कराः घृत्यै। अस्यां पृथिव्यामधि ॥ २ ॥ सर्व्वास्ताः” इति। दार्ढ्यार्थं ‘पृथिव्यां’ उपर्यवस्थिताः क्षुद्रपाषाणाः ॥

(७) अथ सप्तममाह। “यावन्तोऽश्मानोऽस्यां पृथिव्याम्। प्रतिष्ठासु प्रतिष्ठिताः। सर्व्वास्ताः” इति। भूमेरुपरि ‘प्रतिष्ठासु’ दृढस्थलीषु अवस्थिताः ‘अश्मानः’ प्रौढाः पाषाणाः ॥

(८) अथाष्टममाह। “यावतीर्वीरुधः सर्व्वाः। विष्ठिताः पृथिवीमनु। सर्व्वास्ताः” इति। ‘पृथिवीमनु’प्राप्य तत्र तत्र विशेषेणावस्थिता ‘वीरुधः’ वल्ल्यः ॥

(९) अथ नवममाह। “यावतीरोषधीः सर्व्वाः। विष्ठिताः पृथिवीमनु। सर्व्वास्ताः” इति ॥३॥ ‘ओषधीः’ व्रीह्यादयः ॥

(१०) अथ दशममाह। "यावन्तो वनस्पतयः। अस्यां पृथिव्यामधि। सर्व्वास्ताः" इति। 'वनस्पतयः' अश्वत्थपनसा-दयः॥

(११) अथैकादशमाह। "यावन्तो ग्राम्याः पशवः सर्व्वे। आरण्याश्च ये। सर्वास्ता" इति। गवाश्वादयः 'ग्राम्याः' उष्ट्रा-दयः 'आरण्याः'॥

(१२) अथ द्वादशमाह। "ये द्विपादश्चतुष्पादः। अपाद उदरसर्पिणः। सर्वास्ताः" इति। 'द्विपादः' मनुष्याः पक्षिणश्च। 'चतुष्पादः' गवादयः। पादरहिता, उदरेणैव गच्छन्तः। सर्प-जलूकादयः॥

(१३) अथ त्रयोदशमाह। "यावदाञ्जनमुच्यते॥ ४॥ दे-वत्रा यच्च मानुषम्। सर्वास्ता" इति। 'देवत्रा' देवेषु चक्षुषि प्रक्षेपणीयं 'आञ्जनं' यावत्, 'उच्यते'। यदपि 'मानुषं' मनु-ष्यैः प्रक्षेपणीयं, त्रिककुत् पर्वतादिजन्यं 'आञ्जनं'॥

(१४) अथ चतुर्दशमाह। "यावत् कृष्णाय सꣳ सर्वम्। देवत्रा यच्च मानुषम्। सर्वास्ता" इति। 'देवत्रा' देवलोके कृष्णवर्णेनायसा निर्मितमायुधादि 'मानुषं' च, कुठा-रादि॥

(१५) अथ पञ्चदशमाह। "यावल्लोहायसꣳसर्व्वम्। दे-वत्रा यच्च मानुषम्। सर्वास्ताः" इति। 'लोहायसं' ताम्रजन्यं पात्रं॥

(१६) अथ षोडशमाह। "सर्व्वꣳ सीसꣳ सर्व्वं त्रपु। देवत्रा

रो यश्च श्रीयते। सर्व्वास्ताः" इति। अन्तरिक्षसञ्चारिणः सूर्य-रश्मयः 'मरीचयः', घनीभावरहितो जलपरमाणुसमूहोऽधः-पतः 'नीहारः' ॥

(८) अथाष्टममाह। "सर्व्वा विद्युतः सर्व्वास्तनयित्नूः। ह्रादिनीर्यश्च श्रीयते। सर्व्वास्ताः" इति। 'विद्युतः' चञ्चलप्रभाः, 'स्तनयित्नवः' मेघाः, 'ह्रादिन्यः' गर्जनानि, यदपि 'श्रीयते' अश्मन्यादिरूपेणाधःपतति ॥

(९) अथ नवममाह। "सर्व्वाः स्रवन्तीः सरितः। सर्व्व-मप्सु चरञ्च यत्। सर्व्वास्ताः" इति ॥ ३ ॥ 'स्रवन्तीः' 'सरि-तः' गोदावर्यादयः। 'अप्सु चरं' मत्स्यादिकं ॥

(१०) अथ दशममाह। "याश्च कूप्या याश्च नाद्याः स-मुद्रियाः। याश्च वैशन्तीरुतप्रासचीर्याः। सर्व्वास्ताः" इति। कूपे नद्यां समुद्रे वैशन्ते चावस्थिता आपः। कूप्याद्याः 'प्रास-चीः' प्रकर्षेण समन्तादन्योन्यं समवेता आपः ॥

(११) अथैकादशमाह। "ये चोत्तिष्ठन्ति जीमूताः। याश्च वर्षन्ति वृष्टयः। सर्व्वास्ताः" इति। 'जीमूता' मेघाः, 'उत्ति-ष्ठन्ति' ऊर्द्ध्वं घनीभूतास्तिष्ठन्ति, 'वृष्टयो वर्षन्ति' भूमौपतन्ति ॥

(१२) अथ द्वादशमाह। "तपस्तेज आकाशम्। यदा-काशे प्रतिष्ठितम्। सर्व्वास्ताः" इति। 'तपः' सन्तापः, 'तेजः' प्रकाशः, 'आकाशं' अवकाशः, यदप्यन्यदन्धकारादिकं, 'आकाशे प्रतिष्ठितं' ॥

(१३) अथ त्रयोदशमाह। "वायुं वयाꣳसि सर्व्वाणि।४॥

मन्तरिक्षचरञ्च यत्। सर्व्वास्ताः” इति। ये ‘वायुः’ ये च सर्व्वे पक्षिणः। ‘यच्च’ अन्यद्यक्षराक्षसादिकं ‘अन्तरिक्षचरं’॥

(१४) अथ चतुर्दशमाह। “अग्निꣳ सूर्य्यं चन्द्रम्। मित्रं वरुणं भगम्। सर्व्वास्ताः” इति। अग्न्यादयः देवताविशेषाः॥

(१५) अथ पञ्चदशमाह। “सत्यꣳ श्रद्धां तपो दमम्। नाम रूपञ्च भूतानाम्। सर्व्वास्ता इष्टकाः कृत्वा। उप कामदुघा दधे। तेनर्षिणा तेन ब्रह्मणा। तया देवतयाङ्गिरस्वद्ध्रुवासीद” इति॥ ५॥ ‘भूतानां’ प्राणिनां सम्बन्धीनि सत्यवचनादीनि॥

इति सप्तमोऽनुवाकः।

---

अथ अष्टमोऽनुवाकः।

(१) सप्तमे मध्यमलेखायामुपधानमन्त्रा उक्ताः। तदभ्यन्तरलेखायां उपधानमन्त्रा अष्टमेऽभिधीयन्ते। यदुक्तं बोधायनेन। अथाभ्यन्तरलेखायामुपदधाति सर्व्वान् दिवꣳ सर्व्वान् देवान् दिवि इति। तत्र प्रथमं मन्त्रमाह। “सर्व्वान् दिवꣳ सर्व्वान् देवान् दिवि। यच्चान्तर्भूतं प्रतिष्ठितम्। सर्व्वास्ता इष्टकाः कृत्वा। उप कामदुघा दधे। तेनर्षिणा तेन ब्रह्मणा। तया देवतयाङ्गिरस्वद्ध्रुवासीद” इति। कृत्स्नमपि द्युलोकं तस्मिन्नवस्थितान् ‘सर्व्वान्’ अपि ‘देवान्’ अन्यदपि तस्य लोकस्यान्तर्विद्यमानं स्थिरत्वेन स्थितं, ‘सर्व्वास्ता इष्टकाः कृत्वा’ इति पूर्व्ववत॥

ता न भवन्ति। किन्तु शुक्ल कृष्णपक्षरूपेण विश्लेषाकारा ये ते 'केवलाः' 'अर्द्धमासाः' ॥

(८) अथाष्टममाह। "सर्व्वानृतून्त्सर्व्वान्मासान्। संवत्सरञ्च केवलम्। सर्व्वास्ताः" इति। युगरूपेण सङ्घीभावं अप्राप्य प्रभवविभवादि विश्लिष्टाकारेणैव विवक्षितः। केवलः संवत्सरः ॥

(९) अथ नवममाह। "सर्व्वं भूतꣳ सर्व्वं भव्यम्। यच्चातोऽधिभविष्यति। सर्व्वास्ता इष्टकाः कृत्वा। उप कामदुघा दधे। तेनर्षिणा तेन ब्रह्मणा। तया देवतयाङ्गिरस्वद्ध्रुवासीद" इति ॥ ४ ॥ 'भूतं' अतीतं, 'भव्यं' वर्त्तमानं, 'अतः' उभयस्मात्, 'अधि' उपरि, 'यद्भविष्यति' त्रिविधकालवर्त्तिजगद्रूपाः, ताः सर्व्वाः 'कामदुघा' 'इष्टकाः' कृत्वा उपदधे इष्टके 'तेनर्षिणा' मन्त्रदर्शिना, 'तेन ब्रह्मणा' मन्त्रेण तया त्वदभिमानिन्या 'देवतया' उपहिता त्वमङ्गिरोभिः उपहिते च निश्चला अत्र तिष्ठ ॥

इति अष्टमोऽनुवाकः।

---

अथ नवमोऽनुवाकः।

(१) अभ्यन्तरलेखाया मुपधानार्था मन्त्रा अष्टमेऽभिहिताः। नवमे ब्रह्मणा पठनीया मन्त्रा उच्यन्ते। यदुक्तं बोधायनेन। दक्षिणाकाले ब्रह्मासदस्यासीनो वैश्वसृजं व्याचष्टे ध्रुवां प्राचीमहतोर्दिगुच्यते इति ऋचुपचोऽर्द्धर्चशो ब्राह्मणे वाक्यशस्तस्मा

अध्वर्युः प्रतिगृणात्योऽ ब्रह्मन्। ऋतं ब्रह्मन् सत्यं ब्रह्मन् इति। तत्र प्रथमं मन्त्रमाह। "ऋचां प्राची महती दिगुच्यते। दक्षिणामाहुर्यजुषामपाराम्। अथर्वणामङ्गिरसां प्रतीची। साम्नामुदीची महती दिगुच्यते" इति। ऋगभिमानिदेवतानां प्राचीदिक्प्रियेत्यभिज्ञैः 'उच्यते', अत एव सा दिक् 'महती'। यजुरभिमानिदेवतानां दक्षिणादिक्प्रिया, सा च पाररहिता अतिविस्तीर्णा। अथर्वाङ्गिरोनामकद्विविधमन्त्राभिमानिदेवतानां प्रतीचीदिक्प्रिया। सामाभिमानिदेवतानां उदीचीदिक्प्रिया, सा च 'महती' गुणैरभ्यधिका। एताश्चतुर्वेदाभिमानिदेवता आदित्यस्य प्राच्यादिदिक्ष्ववस्थाय सेवन्ते। एतच्छन्दोगा अपि वा आदित्यो देवो मध्वित्यस्यां मधुविद्यायां बहुप्रपञ्चेनामनन्ति ॥

(२) अथ द्वितीयमाह। "ऋग्भिः पूर्वाह्णे दिवि देव ईयते। यजुर्वेदे तिष्ठति मध्ये अह्नः। सामवेदेनास्तमये महीयते। वेदैरशून्यस्त्रिभिरेति सूर्यः" इति। 'दिवि' वर्त्तमान आदित्यो देवः, 'पूर्वाह्णे' काले ऋग्देवताभिः सह गच्छति। 'अह्नः' मध्यमे भागे यजुर्वेद देवतायाः समीपे अवतिष्ठते। 'अस्तमयकाले' सामवेददेवतया पूज्यते। तदेवं त्रिभिर्वेदैरभियुक्तः 'सूर्यः' सर्व्वदा गच्छति ॥

(३) अथ तृतीयमाह। "ऋग्भ्यो जाताᳫ सर्वशो मूर्त्तिमाहुः। सर्व्वा गतिर्याजुषी हैव शश्वत् ॥ १ ॥ सर्व्वं तेजः सामरूप्यᳫ ह शश्वत्। सर्व्वᳫ हेदं ब्रह्मणा हैव सृष्टम्" इति।

सत्यवदनं 'विश्वसृजः' अनुष्ठितवन्तः। तदेव 'सत्यं' एषां विश्वसृजां होत्राख्यर्त्विग् आसीत्॥

(७) अथ सप्तममाह। "अमृतमेभ्य उदगायत्। सहस्रं परिवत्सरान्। भूतꣳ ह प्रस्तोतैषामासीत्। भविष्यत् प्रति चाहरत्" इति। यदेतत् 'अमृतं' देवैः पेयं पीयूषं तदेतत् 'एभ्यः' विश्वसृड्भ्यः सहस्र, सङ्ख्याकान् 'परिवत्सरान्', उद्गाता-भूत्वा औद्गात्रमकरोत्। यत् 'भूतं' अतीतकालस्वरूपं, तत् 'एषां' विश्वसृजां प्रस्तोत्राख्यर्त्विग् 'आसीत्'। यत् तु 'भविष्यत्'कालरूपं तत् प्रतिहर्ता भूत्वा प्रतिहराख्य-सामांशगानरूपं कर्म्म अकरोत्॥

(८) अथाष्टममाह। "प्राणो अध्वर्य्युरभवत्। इदꣳ सर्वꣳ सिषासताम्॥ २॥ अपानो विद्वानावृतः। प्रतिप्रातिष्ठदध्वरे" इति। 'इदं' 'सर्व्वं' कृत्स्नमेतत् सत्रं 'सिषासतां' अनुपर्यन्तं कर्त्तुमिच्छतां विश्वसृजां, 'प्राणः' वायुरेव 'अध्वर्य्युरभवत्'। योऽयं 'अपान'वायुः, 'विद्वान्' प्रयोगाभिज्ञः, सोऽयं 'आवृतः' साकल्येन आर्त्विज्यार्थं वृतः सन्, 'अध्वरे' सोमयागे, स्वयं प्रति-प्रस्थाता भूत्वा 'प्रतिप्रातिष्ठत्' प्रतिप्रस्थातृकर्म्म अकरोत्॥

(९) अथ नवममाह। "आर्त्तवा उपगातारः। सद-स्या ऋतवोऽभवन्। अर्द्धमासाश्च मासाश्च। चमसाध्वर्य्यवोऽभ-वन्" इति। 'आर्त्तवाः' तत्तदृतुयोग्याः पदार्थाः 'उप-गातारः' 'अभवन्'। सामगेषु गायत्सु तदुत्साहार्थं हो इति शब्दमुच्चारयन्तः 'उपगातारः', ये तु वसन्तादयः 'ऋतवः', ते

'सदस्याः' यज्ञसदस्यवस्थिता बहुविधा ब्राह्मणाः कर्मोपदेष्टारः, 'अभवन्'। चतुर्विंशतिः 'अर्द्धमासा' द्वादशमासायमसैर्होतारः 'चमसाध्वर्युसंज्ञका 'अभवन्'॥

(१०) अथ दशममाह। "अंशुं सद्ब्रह्मणस्तेजः। अच्छावाकोऽभवद्यशः। ऋतमेषां प्रशास्तासीत्। यद्विश्वसृज आसत" इति। ॥ ४ ॥ विश्वसृजां यत् 'तेजः' तद्ब्राह्मणाच्छंस्याख्यऋत्विग्भूत्वा अंशुसम्बन्धिशास्त्राणि 'अशंसत्'। विश्वसृजां सम्बन्धि यत् 'यशः', तत् 'अच्छावाकाख्यऋत्विग्' 'आसीत्'। विश्वसृजां सम्बन्धियदृताख्यं मानसं यथार्थचिन्तनं तदेषामृत्विजां प्रशास्त्राख्यऋत्विग् 'आसीत्'॥

(११) अथैकादशमाह। "ऊर्जा राजानमुदवहत्। ध्रुवगोपः सहोऽभवत्। ओजोभ्यष्टौद्ग्रावृणः। यद्विश्वसृज आसत" इति। या इयं 'ऊर्ग्' विश्वसृजां सम्बन्धोरसः, सोऽयं 'राजानमुदवहत्' आसन्दीरूपेण सोममूर्द्धं धृतवान्। यदेषां 'सहः' बलं तत् 'ध्रुवगोपनामकः' भूत्वा ध्रुवाख्यग्रहस्य रक्षकः 'अभवत्'। 'विश्वसृजः' 'यदोजः' सामर्थ्यं 'आसत' सम्पादितवन्तः तत् 'ओजः' ग्रावस्तदाख्यऋत्विग्भूत्वा अभिषवहेतूनां ग्रावणस्तुतिमकरोत्॥

(१२) अथ द्वादशमाह। "अपचितिः पोत्रीयामयजत्। नेष्ट्रीयामयजत्त्विषिः। आग्नीध्राद्विदुषी सत्यम्। श्रद्धा हैवायजत्स्वयम्" इति। येयं विश्वसृजां 'अपचितिः' पूजा सेयं पोत्राख्यऋत्विग्भूत्वा पोतृसम्बन्धिनीं याज्यां पठितवान्। या च विश्वसृजां 'त्विषिः' दीप्तिः, सेयं नेष्ट्राख्यऋत्विग्भूत्वा नेष्टृस-

मन्निर्गो याज्यामपठत्। या विश्वसृजां 'श्रद्धा' सा 'स्वयं' आग्नीध्राख्यऋत्विग्भूत्वा 'आग्नीध्रात्' निमित्तभूतात् यत् 'सत्यं' अवश्यानुष्ठेयं कर्म्म तत् 'विदुषी' सत्ती 'अयजत्' याज्यामपठत्॥

(१३) अथ त्रयोदशमाह। "इरा पत्नी विश्वसृजाम्। आकूतिरपिनड्ढविः॥ ५॥ इध्मꣳ ह क्षुच्चैभ्य उग्रे। तृष्णा चावहतामुभे" इति। येयं 'इरा' अन्नभूता सेयं 'विश्वसृजां' 'पत्नी' बभूव। येयं 'आकूतिः' एषां सङ्कल्परूपा सेयं 'हविः' 'अपिनट्' दासीभूत्वा पेषणमकरोत्। या 'क्षुत्' या च 'तृष्णा' ते उभे उग्ररूपे सत्यौ 'इध्मं' 'आहवतां' भारेण समानीतवत्यौ॥

(१४) अथ चतुर्द्दशमाह। "वागेषाꣳ सुब्रह्मण्यासीत्। छन्दोयोगान् विजानती। कल्पतन्त्राणि तन्वाना हः। अङ्गानि सर्व्वशः" इति। येयं 'एषां' विश्वसृजां 'वाक्' सेयं सुब्रह्मण्याख्या देवता 'आसीत्', तदुपलक्षितः सुब्रह्मण्याख्यऋत्विग् अपि 'आसीत्'। कीदृशी 'सुब्रह्मण्या'। 'छन्दोयोगान्' 'विजानती', गायत्र्यादिच्छन्दसां सम्बन्धिविशेषान् विजानती, तथा 'कल्पतन्त्राणि' कल्पेषु प्रोक्तान् प्रयोगविशेषान्, 'अहः' 'संस्थाः' अग्निष्टोमाद्यादिरूपान् सर्व्वात्मना 'तन्वाना' विस्तारयन्ती॥

(१५) अथ पञ्चदशमाह। "अहोरात्रे पशुपाल्यौ। मुहूर्त्ताः प्रेष्या अभवन्। मृत्युस्तदभवद्धाता। शमितोग्रो विशां पतिः" इति॥६॥ यावेतौ अहोरात्राख्यौ कालविशेषौ तावत्रापेक्षितानां पशूनां पालकौ सम्पन्नौ। ये च मुहूर्त्ताख्याः कालविशेषाः ते

## SANSCRIT WORKS PUBLISHED,

### IN THE OLD SERIES.

| | *Former Price.* | *Reduced Price.* |
|---|---|---|
| The first two Lectures of the Sanhitá of the Rig Véda, with the commentary of Mádhava Áchárya, edited by Dr. E. Röer, Nos. 1 to 4. .. .. .. | 4 0 0 | 2 8 0 |
| The Bṛihad Áranyaka Upanishad, with the commentary of S'ankara Áchárya, and the Gloss of Ánanda Giri, edited by Dr. E. Röer, Nos. 5 to 13, 16 and 18. (*Out of Print.*) | | |
| An English Translation of the above Upanishad and Commentary. Complete in XI. Fasciculi, Nos. 27, 38 and 135. | 3 0 0 | 1 1[illegible] |
| The Chhándogya Upanishad, with the Commentary of S'ankara Áchárya, and the Gloss of Ánanda Giri, edited by Dr. E. Röer. Complete in 7 Fasc. Nos. 14, 15, 17, 20, 23 and 25. (*Out of Print.*) | | |
| An English translation of the Chhándogya Upanishad of the Sáma Veda, by Bábu Rájendralála Mitra. Complete in 2 Fasciculi Nos. 78 and 181. .. .. | | 1 [illegible] |
| The Taittiriya, Aittaréya and Swetás'watara Upanishads, with commentary, &c. Complete in 3 Fasc. Nos. 22, 33, and 34. (*Out of Print*). | | |
| The I's'a, Kéna, Katha, Pras'na, Muṇḍaka, and Máṇḍukya Upanishads, with commentary, &c. Edited by Dr. E. Röer, Complete in 6 Fasc. Nos. 24, 26, 28, 29, 30 and 31. (*Out of Print.*) | | |
| The Taittiríya, Aitareya, S'wetás'watara, Kena, I's'á, Katha, Pras'na, Muṇḍaka and Máṇḍukya Upanishads. Translated from the Original Sanskrit, by Dr. E. Röer, Complete in 2 Fasc. Nos. 41 and 50. .. .. | 0 0 0 | 1 [illegible] |
| Division of the Categories of the Nyáya Philosophy, with a commentary and an English Translation, by Dr. E. Röer. Complete in 2 Fasc. Nos. 32 and 35. (*Out of Print.*) | | |
| The Sáhitya-Darpaṇa, by Viswanátha Kavirája, with English Translation by J. A. Ballantyne, L.L. D. Complete in 5 Fasc., Nos. 36, 37, 53, 54, 55 and 212. (*Out of Print.*) | | |
| Chaitanya Chandrodaya Náṭaka of Kavikarṇapura, edited by Bábu Rájendralál Mitra. Complete in 3 Fasc. Nos. 47, 48 and 80. .. .. .. .. | 3 0 0 | 1 1[illegible] |
| Uttara Naishadha Charita, by S'rí Harsha, with Náráyaṇa's commentary, edited by Dr. E. Röer. Complete in 12 Fasc. Nos. 39, 40, 42, 45, 46, 52, 67, 72, 87, 90, 120, 123 and 124. .. .. .. .. | 12 0 0 | 12 [illegible] |
| Sánkhya-Pravachana-Bháshya, edited by Fitz-Edward Hall, M. A. Nos. 94, 97 and 141. (*Out of Print.*) | | |
| Sarvadars'ana-Sangraha; or an Epitome of the different systems of Indian Philosophy, by Mádhaváchárya, edited by Pandita Is'warachandra Vidyáságara. Complete in 2 Fasc. Nos. 63 and 142. (*Out of Print.*) | | |
| The Súrya-Siddhánta, with its Commentary the Gúḍhártha Prakás'aka, edited by Fitz Edward Hall, M. A. Complete in 4 Nos. 79, 105, 115 and 146. (*Out of Print.*) | | |
| The Tale of Vásavadattá, by Subandhu, with its Commentary, edited by F. E. Hall, M. A. Complete in 3 Fasc. Nos. 116, 130, 148. .. .. .. | | 1 1[illegible] |
| The Elements of Polity, by Kámandakí with Commentary by Pandit Ram Narayan Vidyaratna, edited by Bábu Rájenralála Mitra. Complete in 2 Fasc. Nos. 19 and 179, .. | | 1 [illegible] |
| The Márkandeya Purána. Edited by the Rev. K. M. Banerjea. Complete in 7 Fasciculi, Nos. 114, 127, 140, 163, 169, 177 and 183, .. .. .. | | [illegible] |
| The VEDÁNTA SU'TRA. Commenced by DR. RÖER, and completed by Paṇḍita Rámanáráyaṇa Vidyáratna. Complete in 13 Fasc. Nos. 64, 89, 172, 174, 178, 184, 186, 194, 195, 198, 199, 200 and 201, .. .. | | [illegible] |

"विश्वमेवानु प्रजायते। ब्रह्मण: सायुज्यꣳ। सलोकतां यन्ति। एतासामेव देवतानाꣳ सायुज्यम्। सार्ष्टिताꣳ समानलोकतां यन्ति। य एतदुपयन्ति। येचैनत् प्राहुः। येभ्यश्चैनत् प्राहुः" इति॥ ८॥ 'ये' मनुष्याः 'एतत्' सहस्रसंवत्सरसत्रं 'उपयन्ति' अनुतिष्ठन्ति, 'ये' च अध्यापकाः एतद्ब्राह्मणजातं 'प्राहुः'। 'येभ्यः' च शिष्येभ्यः एतद्ब्राह्मणजातमाहुः, एताननुष्ठातॄनध्यापकान् शिष्यांश्च 'अनु'सृत्य 'विश्वं' 'प्रजायते'। तत्रानुष्ठातारः साक्षाद्विश्वस्य कर्त्तारः अध्यापकास्तदनुष्ठानद्वारा कर्त्तारः शिष्यास्तु प्रथमतस्तदनुष्ठान-प्रकारान्तरं विदित्वा तथानुष्ठाय पश्चाद्विश्वस्य कर्त्तारः तदेवं साक्षात् परम्परया वा तान् सर्व्वाननुसृत्य विश्वं प्रजायते। किञ्च देहपातादूर्द्ध्वं 'ब्रह्मणः' चतुर्मुखस्य, 'सायुज्यं' तादात्म्यं, 'सलो-कतां' समानलोकनिवासं, वा प्राप्नुवन्ति। किञ्च 'एतासामेव' आदित्यानां 'देवतानां', 'सायुज्यं' तादात्म्यं, 'सार्ष्टितां' समानै-श्वर्य्योपेतत्वं, 'सलोकतां' समानलोकनिवासं, वा प्राप्नुवन्ति। तत्र कर्म्मानुष्ठानात् तृप्तितारतम्यानुसारेण फलभेदो द्रष्टव्यः। यदेतद्दर्शपौर्णमासादि सहस्रसंवत्सरान्तं कर्म्मजातमुक्तं, तत्र सर्व्वस्य वैकल्यपरिहारार्थं पुरुषार्थपर्य्यवसानार्थञ्च हर्षविदां परतत्त्वप्रतिपादकं प्रणवमन्ते पठति ओमिति। अतएव महर्षय आहुः——

यस्य स्मृत्या च नामोक्त्या तपो यज्ञक्रियादिषु।
न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतं॥

ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतं ।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्म्म समाधिना इति ॥

अत्र मीमांसाषष्ठाध्यायस्य सप्तमपादे चिन्तितं ।

सहस्रसंवत्सरं सत्रं गन्धर्वादेर्नृणामुत ।
रसायनेन सिद्धानां कुलकल्पोऽथवोचितः ॥
तदायुर्वोऽथवाऽष्टूर्द्धिप्रतानामुतमासगा ।
वत्सरोक्तिस्तदादस्रात्रिषु दिनेषु वा ॥
आद्योदीर्घायुषः सत्वात् नृणामेवाधिसम्भवे ।
द्वितीयोऽस्तु रसस्यायुरहेतुत्वे तृतीयकः ॥
कृत्स्नकर्त्तुः फलित्वेऽस्तु तुर्य्योऽर्थासम्भवे सति ।
पञ्चमोऽस्तु चतुर्विंशत्युत्तमाः सन्ति यदि ॥
षष्ठोऽस्तु यो मास एष संवत्सर इतीरणात् ।
सहस्रमासानाधानादूर्द्धं चेदस्तु सप्तमः ॥
वत्सरप्रतिमा द्वादशरात्रय इति श्रुतेः ।
न रात्रिष्वह्नश्शब्दोऽत्र प्रतिमाया विशेषणात् ॥
त्यारभ्यात्त्रिवृदादुक्तेरष्टमः पक्ष इष्यते ।
त्रिवृदादिपदैः स्तोमविशिष्टमह उच्यते ॥
नाहः सत्रः ततोऽहः सु गौणी संवत्सराभिधा ।
तस्मादिष्यतत्र सत्रे सहस्रदिनमिष्यते ॥

इदमाम्नायते । पञ्चपञ्चाशतस्त्रिवृतः संवत्सराः । पञ्चपञ्चाशतः पञ्चदशाः । पञ्चपञ्चाशतः सप्तदशाः । पञ्चपञ्चा-

ब्रत एकविंशाः। विश्वसृजाᳫं सहस्रसंवत्सरं इति। तत्र स-हस्रसंवत्सरसत्रे गन्धर्वादीनामेवाधिकारः, तेषां दीर्घायुः सद्भावादित्याद्यः पक्षः वसन्ते ब्राह्मणोऽग्निमादधीत, इत्या-दिविधानात् मनुष्याणामेव आहवनीयाद्यग्नयः सम्भवन्ति, नान्येषां गन्धर्वादीनां इति चेत्। तर्हि रसायनेन सिद्धानां दीर्घायुषां मनुष्याणां अधिकार इत्यस्तु द्वितीयः पक्षः। रसचारीणामपुष्यादिजनकत्वमेव न त्वायुर्हेतुत्वं इति चेत्। तर्हि एकस्मिन् कुले समुत्पन्नानां पितृपुत्रपौत्रादीनां बहूनां सम्-भूय सम्भवात् कुलाधिकारः, तृतीयः पक्षोऽस्तु, कुलकर्तुः फलं भवति। न च पितृपुत्रादिषु एकोऽपि कृत्स्नं करोति तस्मात् नास्ति फलं इति चेत्। तर्हि सत्रविधायकवचनबला-देव सत्रिणां दीर्घायुर्भविष्यति इति चतुर्थः पक्षोऽस्तु। नहि अस्य वचनस्य कोऽर्थः सम्भवति तद्बाधकप्रमाभावात्, न च कल्पयितुं शक्यते, सम्भाविनायुष्याणामपि सत्रान्तरेषु प्रवृ-त्तानां दैवात् म्रियमाणानां तत् तत् सत्रविधिवशात् आयु-र्वृद्ध्यदर्शनात् इति चेत्। तर्हि प्रत्यपद्यायत इत्यस्य शब्दस्य पुरुषपरत्वं अङ्गीकृत्य सार्द्धद्विशतानां पुरुषाणामधिकारेऽभिहिते वत्सरचतुष्टयेन सत्रस्य सहस्रसंवत्सरत्वं सम्पद्यते इति पञ्चमः पक्षोऽस्तु। चतुर्विंशति परमाः सत्रमासीरन् इति वचनात् अभ्यधिकानां न तत्राधिकार इति चेत्। तर्हि यो मासः स संवत्सर इति वचनात् संवत्सरशब्दस्य मासपरत्वे सति सहस्र-मासं सत्रमित्येष षष्ठः पक्षोऽस्तु। अष्टमे वत्सरे उपनीतो द्वादश-

वर्षाणि वेदमधीत्य विंशतिवयस्को विवाहं कृत्वा जातपुत्रोऽग्नि-
माद्धीत तस्मात् आधानादूर्द्ध्वमस्यायूंषि न सन्ति सहस्रं मासा
इति चेत्। तर्हि संवत्सरप्रतिमा वै द्वादशरात्रय इति वचनात्
संवत्सरशब्दो द्वादशरात्रिपरः तथा सति रात्रीणां द्वा-
दश सहस्राणि सम्पद्यन्ते। तासु च रात्रिषु षष्ट्युत्तरशतत्र-
यदिवसरूपसंवत्सरत्वेन गण्यमानासु त्रयस्त्रिंशत् संवत्सरेभ्य
ऊर्द्ध्वमासचतुष्टयं भवति। तावत् परिमितं आयुराधाना-
दूर्द्ध्वमपि सम्भवति इति सप्तमः पक्षोऽस्तु। संवत्सरप्रतिमा वै
द्वादशरात्रय इत्यस्मिन् वाक्ये संवत्सरशब्दो न रात्रिपरः
किन्तु तेन शब्देन प्रतिमा विशेष्यते, तस्मात् सप्तमः पक्षोऽयुक्त
इति चेत्। एवं तर्हि संवत्सरशब्दोऽपि दिनपर इति अष्टमः
पक्षोऽस्तु। तथा सति त्रिवृतः संवत्सरा इत्यादिवाक्यानां
स्वारस्यं भवति त्रिवृत्पञ्चदशः सप्तदश एकविंश इत्येते शब्दाः
स्तोमवाचकाः सन्तः स्तोमयुक्त एकैकस्मिन् अहनि यागरूपे
लक्षणया वर्त्तन्ते, अन्येषु तथाविधप्रयोगबाहुल्यात्, नतः
ग्रन्थे क्वचिदपि त्रिवृदादिशब्दाः प्रयुक्ताः, तैश्च शब्दैः सामा-
नाधिकरण्यात् संवत्सरशब्दः स्वावयवभूतेऽहनि लक्षणया वर्त्त-
ते। त्रिवृतः संवत्सरा इत्युक्ते त्रिवृत्स्तोमकयागयुक्तानि अहानि
इत्युक्तं भवति। तस्माद्विश्वसृजां ऋषीणां इदं सत्रं सहस्रदिनं
इति राद्धान्तः॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति श्रीमद्दिद्यायोगीन्द्र-श्रीविद्यातीर्थमुनीश्वरापरावतार-श्रीमद्राजाधिराजपरमेश्वर-वैदिकमार्गप्रवर्त्तक-श्रीवीरबुक्कमहाराजसाम्राज्यधुरन्धरेण माधवामात्येन विरचिते वेदार्थप्रकाशे यजुर्ब्राह्मणे तृतीयकाण्डे द्वादशप्रपाठके नवमोऽनुवाकः॥ ९ ॥

॥*॥ समाप्तश्च प्रपाठकः ॥*॥ समाप्तञ्च काण्डम् ॥*॥

संवत् १८५१ आश्विन शुक्ल १ गुरौ तद्दिने लिखितं ॥

# तैत्तिरीय-ब्राह्मण-तृतीयकाण्डस्य सूचीपत्रम्।

## प्रथमप्रपाठके नक्षत्रेष्ट्युक्तिः।

### १ अनुवाके देवनक्षत्रयाज्यानुवाक्याकथनम्।

---

## २ अनुवाके यमनक्षत्रेष्टिगतयाज्यानुवाक्योक्तिः।

३ अनुवाके चान्द्रमसादीष्टियाज्यानुवाक्याकथनम्।

## ४ अनुवाके देवनक्षत्रेष्टिविधानम् ।

---

## ५ अनुवाके यमनक्षत्रेष्टिविधिः।



---

### ६ अनुवाके चन्द्रमायुष्यादिप्रापकेष्टिविधिः।



---

## द्वितीयप्रपाठके दर्शयागविधिः।

### १ अनुवाके वत्सापाकरणम्।

विषयः पृष्ठे।



## २ अनुवाके बर्हिराहरणम्।

विषयः पृ॰।

३ अनुवाके अमावास्यारात्रिकर्त्तव्यदोहोक्तिः।

---

## ५ अनुवाके व्रीहितुषापनयनार्थोऽवघातः ।

---

६ अनुवाके तण्डुलपेषणम्।

---

### ७ अनुवाके कपालोपधानम् ।

---

## ८ अनुवाके कपालेषु पुरोडाशश्रपणम् ।

---

## ८ अनुवाके वेद्युक्तिः।

---

## १० अनुवाके प्रोक्षण्याद्यासादनादिकृत्यम्।

## तृतीयप्रपाठके पौर्णमासेष्टिः।

### १ अनुवाके आज्यहविर्ग्रहणम्।

---

२ अनुवाके आज्यहविर्ग्रहणप्रैषः ।

विषयः। पृष्ठे।



---

## ३ अनुवाकेपि आज्यहविर्ग्रहणशेषः।

---

४ अनुवाके आज्याधिश्रयणोक्तिः ।

३ अनुवाकेपि आज्यहविर्ग्रहणशेषः।

विषयः। पृष्ठे।



---

४ अनुवाके आज्याधिश्रयणोक्तिः।

---

५ अनुवाके आज्यावेक्षणं यहणञ्च।

---

६ अनुवाके इध्मवर्हिःपूर्वकहविरासादनम्।

विषयः। पृष्ठे।

विषयः। पृष्ठे।

विषयः। पृष्ठे।

## १० अनुवाके पत्नीविषयकमन्त्रोक्तिः ।

## ११ अनुवाके उपवेषपरित्यागः।

विषयः। पृष्ठे।



इति तृतीयप्रपाठकः।

# चतुर्थप्रपाठके नरमेधपशुकथनम्।

१ अनुवाके ब्राह्मणादिनरपशूक्तिः।



२ द्वितीये अनुवाके सूतादिनरपशूपाख्यानम्।



३ अनुवाके कौलालादिनरपशुनिर्द्धारणम्।



४ अनुवाके जारादिनरपशुकथनम्।

५ अनुवाके कैवर्त्तादिनरपशूक्तिः ।

| विषयः । | पृष्ठे । |
| --- | --- |
| नदीसून्यस्याद्यभिमानिदेवतानिमित्तं कैवर्त्तनिषादादिपुरुषपशुबलिदानोक्तिः .. .. .. ... .. .. | ३१० |

---

६ अनुवाके कुब्जादिनरपशुनिर्देशः ।

| | |
| --- | --- |
| कार्य्यविनाशप्रहर्षाद्यभिमानिदेवतानिमित्तं कुब्जवामनादिपुरुषपशुबलिदाननिरुक्तिः .. .. .. .. .. .. | ३११ |

---

७ अनुवाके चौर्यतात्पर्ययुक्तादिनरपशुकथनम् ।

| | |
| --- | --- |
| अतिवीरहत्याद्यभिमानिदेवतानिमित्तं चौर्यतात्पर्ययुक्त-परदोषसूचकादिपुरुषपशुबलिदानकथनं .. .. .. | ३१२ |

---

८ अनुवाके इन्धनाहर्त्रादिनरपशुनिर्देशः ।

| | |
| --- | --- |
| भाप्रभाद्यभिमानिदेवतानिमित्तं इन्धनाहर्त्रभिप्रज्वालककर्त्रादिपुरुषपशुबलिदानप्रस्तावः.. .. .. .. .. | ३१३ |

---

९ अनुवाके गजपालकादिनरपशुकथनम् ।

| | |
| --- | --- |
| गतिविशेषवेगाद्यभिमानिदेवतानिमित्तं गजपालकाश्वपालकादिपुरुषपशुबलिदानप्रपञ्चः .. .. .. .. .. | ३१४ |

---

१० अनुवाके लोहकारादिनरपशुविस्तारः ।



११ अनुवाके यमप्रस्वादिनरपशुकथनम् ।



१२ अनुवाके मत्स्यग्राह्यादिनरपशुविवेकः ।



१३ अनुवाके देशराजवार्त्ताकथनशीलादिनरपशुविनियोगः ।



१४ अनुवाके अतिनिकृष्टजातियुक्तादिनरपशुकथनम् ।

## ३ काण्डे ५ प्रपाठके इष्टिहौत्रमन्त्रकथनम्।

### १ अनुवाके होतृजप्यसामिधेनीमन्त्रोक्तिः।



### २ अनुवाके अवशिष्टैकादशसामिधेनीमन्त्रप्रपञ्चः।

२ अनुवाके प्रयाजविषयकमैत्रावरुणप्रैषोक्तिः ।



३ अनुवाके आप्रीसञ्ज्ञकप्रयाजयाज्योक्तिः ।



४ अनुवाके पर्यग्निकरणीयानामृचामुक्तिः ।



५ अनुवाके मैत्रावरुणप्रैषोक्तिः ।



६ अनुवाके अध्रिगुप्रैषकथनम् ।



७ अनुवाके स्तोकविषयकमैत्रावरुणानुवचनोक्तिः ।

# ७ प्रपाठके अच्छिद्रकाण्डकथनं।

## १ अनुवाके दर्शपौर्णमासयागविषयकप्रायश्चित्तोक्तिः।

विषयः। पृष्ठे।



---

४ अनुवाके ऐष्टिकयागीययजमानमन्त्रोक्तिः।

विषयः।　　　　　　　　　　　　　　　　　　　　　　　　　पृष्ठे।

विषयः। पृष्ठे।



---

५ अनुवाके अनुक्तदर्शपौर्णमासाङ्गीभूतकतिपयमन्त्रोक्तिः।

---

६ षष्ठेऽनुवाके चतुर्थपञ्चमानुवाकानुक्ता इष्टिमन्त्राः।

विषयः । पृष्ठे ।

---

७ अनुवाके सोमाङ्गभूता दीक्षाङ्गमन्त्राः ।

---

८ अनुवाके पशुविषयमन्त्रोक्तिः।



---

९ अनुवाके अभिषवादिविषयमन्त्रोक्तिः।

## १० अनुवाके प्रायश्चित्तमन्त्रोक्तिः।



K

## ११ अनुवाके दार्भिकप्रायश्चित्तमन्त्रोक्तिः।



## १२ अनुवाके यजमानजपार्थमन्त्रोक्तिः।



## १३ अनुवाके ऋजीषप्रोक्षणकथनम्।



## १४ अनुवाके अवभृथादिषेचनमन्त्रोक्तिः।

# ८ प्रपाठके चिराचाश्वमेधस्य प्रथमदिनकृत्यम्।

## १ अनुवाके यजमानसंस्कारकथनं।



## २ अनुवाके ब्रह्मौदनोक्तिः।

## ३ अनुवाके अश्वबन्धनम्।



---

## ४ अनुवाके रशनाबद्धाश्वस्यावगाहनोक्तिः।



---

## ५ अनुवाके अश्वप्रोक्षणोक्तिः ।



## ६ अनुवाकेऽश्वशरीरपतितबिन्दुमन्त्रणम् ।

## ७ अनुवाके अध्वर्युकर्तृकाश्वप्रोक्षणम्।

विषयः। पृष्ठे।



## ८ अनुवाके अश्वचरिताश्वरूपयोर्होमः।

## ९ अनुवाके अश्वनामवाचनायुक्तिः।



## १० अनुवाके दीक्षाभिधानम्।

---

११ अनुवाके वैश्वदेवमन्त्रव्याख्या।



---

१२ अनुवाकेऽश्वचरणकाले देवयजनदेशे कर्त्तव्ये-ष्टिचयोक्तिः।



---

१३ अनुवाके उखास्थाग्न्युपस्थानमन्त्रव्याख्योक्तिः ।



---

१४ अनुवाके अन्नहोमोक्तिः ।



---

१५ अनुवाके अन्नहोमप्रकारविशेषोक्तिः ।

---

## १६ अनुवाके पूर्वोक्तानुवाकस्य विस्तरेण व्याख्या ।



---

## १७ अनुवाके अश्वमेधमन्त्रानुवाकव्याख्या।



---

## १८ अनुवाके अश्वमेधानुवाकावशिष्टव्याख्या।

---

## १९ अनुवाके यूपप्रयोगाभिधानं ।



---

## २० अनुवाके यूपस्थापनादिनिरूपणं ।



---

## २१ अनुवाके चेतव्याग्न्यादिविशेषोक्तिः ।

---

२२ अनुवाके अश्वमेधद्वितीयदिनकर्त्तव्यवहिष्पव-
मानविशेषोक्तिः।



---

२३ अनुवाके अश्वे पर्यग्न्यपशुनियोजनं।

# ९ प्रपाठके रोहितादिपश्वालम्भनं ।

## १ अनुवाके रोहिताद्यष्टादशपश्वालम्भोक्तिः ।



## २ अनुवाके चातुर्मास्यपशुप्रयोगकथनं ।

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL,

*No. 45, Park Street.*

## 1.—THE SOCIETY'S PUBLICATIONS.

### A. Bibliotheca Indica.

*Sanskrit Works complete.*

*Old Series, Nos.* 1 *to* 211, *demi* 8vo.

| | RS. | AS. |
|---|---|---|
| The first two Lectures of the Sañhitá of the Ṛig Veda. Edited by Dr. E. Röer, Nos. 1 to 4, ... ... | 2 | 8 |
| Uttara Naishadha Charita, by S'rí Harsha, with a Commentary. Edited by Dr. E. Röer. Complete in 12 Fasciculi, Nos. 39, 40, 42, 45, 46, 52, 67, 72, 87, 90, 120 and 124, | 7 | 8 |
| Chaitanya Chandrodaya Náṭaka, by Kavikarṇapura. Edited by Bábu Rájendralála Mitra. Complete in 3 Fasciculi, Nos. 47, 48 and 80, ... ... ... | 1 | 14 |
| Vásavadattá, by Subandhu, with its commentary entitled Darpaṇa. Edited by Professor F. E. Hall, M. A. Complete in 3 Fasciculi, Nos. 116, 130 and 148, ... | 1 | 14 |
| The Márkaṇḍeya Puráṇa. Edited by the Rev. K. M. Banerjea. Complete in 7 Fasciculi, Nos. 114, 127, 140, 163, 169, 177 and 183, ... ... ... | 4 | 6 |
| Vedánta Sutras or Aphorisms of the Vedánta, with the Commentary of Sáñkara and the Gloss of A'nanda Giri. Edited by Paṇḍita Rámanárayana Vidyáratna, 2 to 13 Fasciculi, Nos. 89, 172, 174, 178 184, 186, 194, 195, 198, 199, 200 and 201, ... ... ... | 7 | 8 |
| The Elements of Polity, by Kámandaki. Edited by Rájendralála Mitra. Complete in 3 Fasciculi, Nos. 19, 179 and 206, ... ... ... ... | 1 | 14 |

*New Series, Nos.* 1 *to* 85, *demi* 8vo.

| | RS. | AS. |
|---|---|---|
| The S'rauta S'útra of A'svaláyana, with the Commentary of Gárgya Náráyáṇa. Edited by Paṇḍita Rámanáráyaṇa Vidyáratna. Complete in 10 Fasciculi, Nos. 55, 61, 66, 69, 71, 80, 84, 86, 90 and 93, ... ... | 6 | 4 |
| The S'añkara Vijaya of Anantánanda Giri. Edited by Paṇḍita Jayanáráyana Tarkapaṇchánana, in 3 Fasciculi, Nos. 46, 137 and 138, ... ... ... | 1 | 14 |
| Vais'eshika Dars'ana, with the Commentaries of S'añkara Mis'ra, &c. Edited by Paṇḍita Jayanáráyana Tarkapaṇchánana. Complete in 5 Fasciculi, Nos. 4, 5, 6, 8 and 10, ... ... ... ... ... | 3 | 2 |

RS. AS.

The Nyáya Dars'ana of Gotama, with the Commentary of Vátsyáyana. Edited by Paṇḍita Jayanáráyana Tarkapanchánana. Complete in 3 Fasciculi, Nos. 56, 67 and 70, ... ... ... ... 1 14

Páli Grammar, by Káccháyana, Edited by Dr. F. Mason, 1 4

The Das'a-Rúpa, with Dhanika's Commentary. Edited by Professor F. E. Hall, D. C. L. Complete in 3 Fasciculi, Nos. 12, 24 and 82, ... ... ... 1 11

The Aphorisms of S'áṇḍilya, with the commentary of Svapnes'vara. Edited by J. R. Ballantyne, LL. D. Complete in one Fasciculus, No. 11, ... ... ... 0 10

The Nárada Pancharátra. Edited by the Rev. K. M. Banerjea. Complete in 4 Fasciculi, Nos. 17, 25, 34 and 75, ... 2 8

The Kaushítaki-Bráhmaṇa-Upanishad with Commentary, and a translation by E. B. Cowell, M. A. Complete in 2 Fasciculi, Nos. 19 and 20, ... ... ... 1 4

The Kávyádars'a of S'rí Daṇḍin. Edited with a Commentary by Paṇḍita Premachandra Tarkavágís'a. Complete in 5 Fasciculi, Nos. 30, 33, 38, 39 and 41, ... 3 2

The Sáṅkhya Sára of Vijnána Bhikshu. Edited by Dr. F. E. Hall, 1 Fasciculus, No. 83, ... ... ... 0 10

The Brihat Sañhitá of Varáha-Mihira. Edited by Dr. H. Kern, Complete in 7 Fasciculi, Nos. 51, 54, 59, 63, 68, 72 and 73, ... ... ... 4 6

The Maitrí Upanishad with a commentary and a translation. By E. B. Cowell, M. A., Published 3 Fasciculi, ... 1 4

The Gopála Tapini. Edited by Paṇḍita Harachandra Vidyábhushaṇa, No. 183, ... ... ... 0 10

The Grihya Sútra of A'svaláyana, with the commentary of Gárgyanáráyaṇa, edited by A'nandachandra Vedántavágis'a. Nos. 102, 132, 143 and 164, ... ... 2 8

*Sanskrit Works in progress.*

*Old Series, Nos.* 1 *to* 221, *demi* 8vo.

The Lalita-Vistara, or Memoirs of the Life and Doctrines of S'ákya Sinha. Edited by Bábu Rájendralála Mitra. Published 5 Fasciculi, Nos. 51, 73, 143, 144 and 145,... 3 2

The Taittiríya Bráhmaṇa of the Black Yajur Veda with the commentary of Sáyana. Edited by Bábu Rájendralála Mitra. Published 23 Fasciculi, Nos. 125, 126, 147, 150, 151, 152, 153, 154, 155, 175, 176, 188, 189, 190, 191, 192, 196, 197, 204, 210, 216, 220 and 221, 13 12

Taittiriya Sañhitá. Edited by Dr. E. Röer and E. B. Cowell, M. A. Published 22 Fasciculi, Nos. 92, 117, 119, 122, 131, 133, 134, 137, 149, 157, 160, 161, 166, 171, 180, 185, 193, 202, 203, 218, 219 and 221, ... 13 12

*New Series, Nos.* 1 *to* 198, *demi* 8vo.

The Taittiriya A'raṇyaka of the Black Yajur Veda. Edited by Bábu Rájendralála Mitra. Published 9 Fasciculi, Nos. 60, 74, 88, 97, 130, 144, 159, 169 and 203, ... 5 0

RS. AS.

The Nukhbat-al Fikr wa Nuzhat-al Nazr Edited by Capt. W. N. Lees, LL. D. 1 Fasciculus, New Series, No. 37, — 0 10

The Conquest of Syria, commonly ascribed to Wáqidí. Edited with notes by Capt. W. N. Lees, LL. D. Complete in two Vols., being Nos. 59, 66, 96, 98, 102, 103, 164, 168 and 187, ... ... ... ... — 5 10

Futúh-ul-Shám, an account of the Moslem Conquests in Syria by Mír Isma'íl. Edited by Capt. W. N. Lees, LL. D. 4 Fasciculi, being Nos. 56, 62, 84 and 85, ... — 2 8

The Maghází of Wáqidí. Edited by A. von Kremer. 5 Fasciculi, Nos. 110, 112, 113, 121 and 139, ... — 3 2

Suyúṭí's Itqán, on the Exegetic Sciences of the Qorân. 10 Fasciculi, ... ... ... ... — 8 0

*Arabic Works in progress, royal* 8vo.

Biographical Dictionary of Persons who knew Muhammad. Published 20 Fasciculi, at 12 annas each, ... ... — 15 0

*Persian Works, complete, demi* 8vo.

Táríkh i Fírúz-Sháhí of Ziá-i Baraní. Edited by Sayyid Ahmad Khán. Complete in 7 Fasciculi, ... ... — 4 6

Táríkh i Baihaqí of Mas'úd. Edited by the late W. H. Morley. Complete in 9 Fasciculi, ... ... — 5 10

The Muntakhab-ut-Tawáríkh. Edited by Maulawí Ághá Ahmad 'Alí. Vols. I. II. and III. complete, ... — 9 6

Wís o Rámín, an ancient Persian poem. Edited by Maulawí Ághá Ahmad 'Alí. 5 Fasciculi, ... — 3 2

Ṭabaqát-i Náçirí. Edited by Capt. W. N. Lees, LL. D. 5 Fasciculi, ... ... ... ... — 3 2

Iqbálnámah-i-Jahángírí by Mu'tamid Khan. Edited by Maulawis 'Abd ul Hai and Ahmad 'Ali. 3 Fasciculi, New Series, Nos. 77, 78 and 79, ... ... — 1 14

The Álamgír Námah by Muhammad Kázim ibn i Muhammad Amín Munshí. Edited by Maulawís Khádim Husain and Abdu-l Hai. 12 Fasc. at 0-10, ... ... — 7 8

The Pádisháh Námah by Abd-al-Hamíd Láhaurí. Edited by Maulawís Kabír-ud-dín Ahmad and 'Abdur-Rahím. 18 Fasciculi, at 0-10, ... ... ... — 11 4

*Persian Works in progress, demi* 8vo.

The Muntakhab ul-lubáb of Kháfí Khán, edited by Maulawi Ghulám Qádir and Kabír-ud-dín Ahmad. P[illegible]shed 16 Fasciculi, ... ... *in pr*[illegible] ... — 10 0

The Maásir i 'Álamgírí by Musta'idd Khá[illegible] Maulawí Ághá Ahmad 'Alí. Published 1[illegible]

*Persian Works in progress,* [illegible]

The Áín-i-Akbarí by Abul Fazl i Mubárik [illegible] Edited by H. Blochmann, M. A. Publ[illegible] Fas[illegible] with plates, at Rs. 1-4 each, ...

| | RS. | AS. |
|---|---|---|
| The Farhang i Rashídí, a critical Persian Dictionary by Mullá 'Abdurrashíd of Tattah. Edited by Maulawí Zulfaqár 'Alí. Published 1 Fasc., ... ... | 1 | 4 |

*Persian Works in progress, royal* 8vo.

| | RS. | AS. |
|---|---|---|
| Sikandarnámah i Bahrí by Nizámí. First Fasc. edited by Dr. A. Sprenger and Ágá Muhammad Shustarí. Fasc. II. edited by M. Ághá Ahmad 'Alí, ... ... | 2 | 0 |

*English Translations from Persian Works in progress.*

| | RS. | AS. |
|---|---|---|
| The Áín i Akbarí of Abul Fazl i Mubárik i 'Allámí, by H. Blochmann, M. A. Published 4 Fasciculi, with 17 plates, Nos. 149, 158, 163 and 194, ... ... ... | 7 | 0 |

B. MISCELLANEOUS.

| | RS. | AS. |
|---|---|---|
| One complete set of the Journal of the Asiatic Society of Bengal, ... ... ... ... ... | 750 | 0 |
| Journal of the Asiatic Society, from Vol. XII. for 1842, to Vol. XXXVI. for 1867, except Vols. XXIII, XXIV. and XXIX. prices as per title page. | | |
| Asiatic Researches, from Vols. VI. to XII. and Vols. XVII. to XX., each at, ... ... ... ... | 10 | 0 |
| Ditto ditto Index, ... ... ... ... | 5 | 0 |
| Catalogue of the Books and Maps in the Library of the Asiatic Society, by ditto ditto, 1856, ... ... | 3 | 0 |
| ——— of the Sanscrit Books and MSS. of the Asiatic Society, ... ... ... ... ... | 1 | 0 |
| ——— of Persian, Arabic, and Urdu, ditto, ... ... | 1 | 0 |
| ——— of the Fossil Remains of Vertebrata from the Sewalik Hills, the Nerbudda, Perim Island, &c. in the Museum of the Asiatic Society of Bengal. By H. Falconer, Esq., M. D., F. R. S and H. S.... ... ... | 2 | 0 |
| ——— of the Recent Shells in the Museum of the Asiatic Society, by W. Theobald, Esq., Jnr. ... ... | 3 | 0 |
| ——— of the Reptiles in the Asiatic Society's Museum by W. Theobald, Esq., Jr., ... ... ... | 3 | 0 |
| Fatáwa i 'Álamgírí, 2nd Vol. 759 pages, 3rd Vol. 565 pages, 6th Vol. 667 pages, royal 4to., per Vol., ... ... | 8 | 0 |
| Harivañsa, 563 pages, royal 4to., ... ... ... | 3 | 0 |
| Iṣṭiláhát i Çúfiyah, edited by Dr. A. Sprenger, 8vo., ... | 0 | 12 |
| Jawámi'ul 'ilm ir Riází, 168 pages with 17 plates, 4to., ... | 2 | 0 |
| Khazánat ul 'ilm, 694 pages, 4to., ... ... ... | 4 | 0 |
| Mahábhárata, Vols. 3rd and 4th, royal 4to. (& Index,) ... | 40 | 0 |
| Rájatarangini, 440 pages, 4to. .. ... ... | 4 | 0 |
| Sharáyatu-l Islám, 631 pages, 4to. .. ... ... | 4 | 0 |
| Táríkh-i Nádirí, ... ... ... ... | 3 | 0 |
| Csoma's Tibetan Grammar, ... ... ... | 8 | 0 |
| ——— ——— Dictionary, ... ... ... | 10 | 0 |
| Anísul Musharrihín, 541 pages complete, 4to.... ... | 3 | 0 |
| Vedánta-Sára, translated by Dr. E. Röer, ... ... | 0 | 8 |